## दिलीपपरीक्षणम्—

अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गंगाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥१॥

सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ २ ॥

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥३॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥४॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषंगो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥५॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ६ ॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥७॥

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्छति मारुतस्य ॥८॥

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥९॥

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥१०॥

कण्डूयमानेन कटं कदाचिद् वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच, सेनान्यमालीढमिवासुरास्त्रैः ॥११॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥१२॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणित पारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥१३॥

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान् दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्ष्यं न तद्यशः शस्त्रभृतां क्षिणोति ॥१४॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावात् आत्मन्यवज्ञां शिथिलीचकार ॥१५॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभंगे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥१६॥

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥१७॥

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्ने र्नश्यत्पुरस्तादनुपेक्षणीयम् ॥१८॥

स त्वं मदीयेन शरीरवृत्तिं, देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुक बालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥१९॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किंचिद् विहस्यार्थपतिं बभाषे ॥२०॥

एकातपत्रं जगतः प्रभुत्वं नवंवयः कान्तमिदं वपुश्च ।
अल्पस्य हेतो र्बहु हातुमिच्छन् विचारमूढ़ः प्रतिभासि मे त्वम् २१

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥२२॥

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः २३

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥२४॥

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥२५॥

निशम्यदेवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासित कातराक्ष्या निरीक्ष्यमाणः सुतरांदयालुः ॥२६॥

क्षतात् किलत्रायते इत्युदग्रः क्षत्रस्यशब्दो भुवनेषुरूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥२७॥

कथं नु शक्योऽनुनयो महर्षे र्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥२८॥

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद् विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥२९॥

भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ।।३०।।

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालु ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ।।३१।।

सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।
तद्भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ।।३२।।

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ।।३३।।

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ।।३४।।

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ।।३५

तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ३६

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ।।३७।।

———

# कुमारसंभवम्

## भगवान् शंकरः पार्वतीम्प्रति

अभ्यर्थ्यमाना विबुधैः समग्रैः प्रह्वैः सुरेन्द्रप्रमुखैरुपेत्य ।
तं पाययामास सुधातिपूर्णं सुरापगा स्वं स्तनमाशु मूर्ता ॥१
पिबन्स तस्याः स्तनयोः सुधौघं क्षणंक्षणं साधु समेधमानः ।
प्रापाकृतिं कामपि षड्भिरेत्य निषेव्यमाणः किलकृत्तिकाभिः ॥२
भागीरथीपावककृत्तिकानामानन्दबाष्पाकुललोचनानाम् ।
तं नन्दनं दिव्यमुपात्तुमासीत् परस्परं प्रौढतरो विवादः ॥३
अत्रान्तरे पर्वतराजपुत्र्याः समं शिवः स्वैरविहारहेतोः ।
नभो विमानेन विगाहमानो मनोतिवेगेन जगाम तत्र ॥४
निसर्गवात्सल्यवशाद् विगूढचेतः प्रमोदौ गलदश्रुनेत्रौ ।
अपश्यतां तं गिरजागिरीशौ षडाननं षड्दिन जातमात्रम् ॥५
अथाह देवी शशिखण्डमौलिं कोऽयं शिशुर्दिव्यवपुः पुरस्तात्।
कस्याथवा धन्यतमस्य पुंसो मातास्य का भाग्यवतीषु धुर्या ॥६
स्वर्गापगासावनलोऽयमेताः षट् कृत्तिकाः किं कलहाय्यमानाः।
पुत्रो ममायं न तवायमित्थं मिथ्येति वैलक्ष्यमुदाहरन्ति ॥७
एतेषु कस्येदमपत्यरत्नं शाखिलत्रिलोकीतिलकाय्यमानम् ।
अन्यस्य कस्याप्यथदेवदैत्यगंधर्वसिद्धोरगराक्षसेषु ॥८
श्रुत्वेति वाक्यं हृदयप्रियायाः कौतूहलिन्या विमलस्मितश्रीः ।
सान्द्रप्रमोदोदयसौख्यहेतु भूतं वचोऽवोचत चन्द्रचूडः ॥९

जगत्त्रयीनन्दन एष वीरः प्रवीरमातुस्तव नन्दनोऽस्ति ।
कल्याणि कल्याणकर. सुराणां त्वत्तोऽपरस्याःकथमेषसर्गः ॥१०

देवि त्वमेवास्य निदानमास्से सर्गे जगन्मंगलगानहेतोः ।
सत्यं त्वमेवेति विचारयस्व रत्नाकरे युज्यत एव रत्नम् ॥११

अत. शृणुष्वावहितेन यूत्तं वीजं यदग्नौ निहितं मया तत् ।
संक्रान्तमन्तस्त्रिदशापगायां ततोऽवगाहे सति कृत्तिकासु ॥१२

गर्भत्वमाप्तं तदमोघमेतत् ताभिः शरस्तम्बमधि न्यधायि ।
बभूव तत्रायमभूतपूर्वो महोत्सवोऽशेषचराचरस्य ॥१३

अशेषविश्वप्रियदर्शनेन धुर्या त्वमेतेन सुपुत्रिणीनाम् ।
अलं विलम्ब्याचलराजपुत्रि स्वपुत्रमुत्सगतले निधेहि ॥१४

अथेति वादिन्यमृतांशुमौलौ शैलेन्द्रपुत्री रभसेन सद्यः ।
सान्द्रप्रमोदेन सुपीनगात्री धात्री समस्तस्य चराचरस्य ॥१५

किरीटवद्धाञ्जलिभिर्नभ स्थैर्नमस्कृता सत्वरनाकिलोकैः ।
विमानतोऽवातरदात्मजं तं महीतुमुत्कण्ठितमानसाभूत् ॥१६

स्वर्गापगापावककृत्तिकादीन् कृताञ्जलीनानमतोऽपि भूयः ।
हित्वोत्सुका तं सुतमाससाद पुत्रोत्सवे माद्यति का न हर्षात् ॥१७

प्रमोदवाष्पाकुललोचना सा न तं ददर्श क्षणमग्रतोऽपि ।
परिस्पृशन्ती करकुड्मलेन सुखान्तरं प्राप किमप्यपूर्वम् ॥१८

सुविस्मयानन्दविकस्वरायाः शिशुर्गलद्वाष्पतरंगितायाः ।
विवृद्धवात्सल्यरसोत्तराया देव्या दृशोर्गोचरतां जगाम ॥१९

तमीक्षमाणा क्षणमीक्षणानां सहस्रमाप्तुं विनिमेषमैच्छत् ।
सा नन्दनालोकनमंगलेषु क्षणेक्षणे तृप्यति कस्य चेतः ॥२०

विनम्रदेवासुरपृष्ठगाभ्यामादाय तं पाणिसरोरुहाभ्याम् ।
नवोदयं पार्वणचन्द्रचारुं गौरी स्वमुत्संगतलं निनाय ॥

स्वमंकमारोप्य सुधानिधानमिवात्मनो नन्दनमिन्दुवक्त्रा
तमेकमेषा जगदेकवीरं बभूव पूज्या धुरि पुत्रिणीनाम् ॥

निसर्गवात्सल्यरसौघसिक्ता सान्द्रप्रमोदामृतपूरपूर्णा
तमेकपुत्रं जगदेकमाताभ्युत्संगिनं प्रस्नविणी बभूव ॥

अशेषलोकत्रयमातुरस्याः पपौ मातुरः स्तन्यसुधामधासीत्
सुरस्रवन्त्याः किल कृत्तिकाभिर्मुहुर्मुहुः सस्पृहमीक्ष्यमाणः ॥

कुमारसंभवम् ।

---

# गुरुदक्षिणा

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥१॥
स मृण्मये वीतहिरण्मयत्वात् पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥२॥
तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।
विशाम्पतिर्विष्टरभाजमारात् कृताञ्जलिः कृत्यविदित्युवाच ॥३॥
अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥४॥
कायेन वाचा मनसाऽपि शश्वद् यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥५॥
आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥६॥
क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥७॥
अपि प्रसन्नेन महर्षिणा त्वं सम्यग् विनीयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥८॥
इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद् वरतन्तुशिष्यः ॥९॥
सर्वत्र नो वार्तमवेहि राजन् नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥१०॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग तयातिशेषे । १
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥११॥
शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥१२॥
स्थाने भवानेकनराधिपः सन् अकिंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥१३॥
तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥१४॥
एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन् गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥१५॥

कौत्स उवाच—

समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥१
निर्बन्धसंजातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥
सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥

इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥
गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥

स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्यावद्यते साधयितुं त्वदर्थम् ॥२१॥
तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्संगरमग्रजन्मा।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥२२॥
प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥२३॥
तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥२४॥
जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥२५॥
अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥२६॥
किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥२७॥
आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥२८॥

---

# ऋतुसंहारम्

## ग्रीष्मः

प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसंचयः।
दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये !

पटुतरवनदाहात् प्लुष्टशस्यप्ररोहाः
परुषपवनवेगात् क्षिप्तसंशुष्कपर्णाः।
दिनकरपरितापात् क्षीणतोयाः समन्तात्
विदधति भयमुच्चैर्वीक्ष्यमाणा वनान्ताः॥

ध्वनति पवनविद्धः पर्वतानां दरीषु
स्फुरति पटुनिनादः शुष्कवंशस्थलीषु।
प्रसरति तृणमध्ये लब्धवृद्धिः क्षणेन
क्षपयति मृगयूथं प्रान्तलग्नो दवाग्निः॥

गजगवयमृगेन्द्राः वन्हिसंतप्तदेहाः
सुहृदइवसमेता द्वंद्वभावं विहाय।
हुतवहपरिखेदादाशु निर्गत्य कक्षाद्
विपुलपुलिनदेशान्निम्नगामाश्रयन्ते॥

रवेर्मयूखैरभितापितोभृशं विह्यमानः पथि तप्तपांशुभिः।
अवाङ्मुखो जिह्मगतिः श्वसन्मुहुः फणी मयूरस्यतले निषीदति।

## वर्षा

ससीकरांभोधरमत्तकुञ्जर
स्तडित्पताकोऽशनिशब्दनिर्मलः।
समागतो राजवदुद्धतद्युति
र्घनागमः कामिजनप्रियः प्रिये।

सदा मनोज्ञं स्वनदुत्सवोत्सुकं विकीर्णविस्तीर्णकलापशोभितम्।
ससम्भ्रमालिङ्गन चुम्बनाकुलं प्रवृत्तनृत्यं कुलमद्य बर्हिणाम्॥
तृणोत्करैरुद्गतकोमलाङ्कुरैः श्चितानि नीलैर्हरिणीमुखक्षतैः।
वनानि वैन्ध्यानि हरन्ति मानसं विभूषितान्युद्गतपल्लवैर्द्रुमैः॥

मुदित इव कदम्बैर्जातिपुष्पैः समन्तात्
पवनचलितशाखैः शाखिभिर्नृत्यतीव।
हसितमिव विधत्ते सूचिभिः केतकीनाम्
नवसलिलनिषेकैश्छिन्नतापो वनान्तः॥

शरद्

काशांशुका विकचपद्ममनोज्ञवक्त्रा,
सोन्मादहंसरवनूपुरनादरम्या,
आपक्वशालिरुचिरानतगात्रयष्टिः
प्राप्ताशरन्नवधूरिव रूपरम्या॥
काशैर्मही शिशिरदीधितिना रजन्यो
हंसैर्जलानि कुसुमभारनतैर्वनान्ता,
सप्तच्छदैः कुसुमभारनतैर्वनान्ता
शुक्लीकृतान्युपवनानि च मालतीभिः
शरदि कुमुदसङ्गाद्वायवो वान्तिशीता
विगतजलदवृन्दा दिग्विभागा मनोज्ञा।
विगतकलुषमम्भः श्यानपङ्का धरित्री
विमलकिरणचन्द्रं व्योम ताराविचित्रम्॥

### हेमन्तः

बहुगुणरमणीयो योषितां चित्तहारी
परिकतवहुशालीलि न्याहुतग्रामसीमा
विनिपतिततुषारः क्रौञ्चनादोपगीतः
प्रदिशतु हिमयुक्तस्त्वेष कालः सुखं वः ॥

### शिशिरः

न चन्दनं चन्द्रमरीचिशीतलं नहर्म्यपृष्ठं शरदिन्दुनिर्मलम्
न वायवः सान्द्र तुषारशीतला जनस्य चित्तं रमयन्ति साम्प्रतम् ॥
निरुद्धवातायनमन्दिरोदरं हुताशनो भानुमतो गभस्तयः ।
गुरूणि वासांस्यबलाः सयौवनाः प्रयान्ति कालेऽत्र जनस्य सेव्यताम् ॥

### वसन्तः

द्रुमाः सपुष्पाः सलिलं सपद्मं स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्चरम्या सर्वं प्रिये चारुतरं वसन्ते ॥
आदीप्तवन्हि सदृशैर्मरुतावधूतैः सर्वत्र किंशुकवनैः कुसुमावनम्रैः ।
सद्योवसन्तसमयेन समाचितेयं रक्तांशुका नववधूरिव भाति भूमिः ॥

आकम्पयन् कुसुमिताः सहकारशाखा
विस्तारयन् परभृतस्य वचांसि दिक्षु,
वायुर्विवाति हृदयानि हरन्नराणां
नीहारपातविगमात्सुभगो वसन्ते ॥

कर्णेषु योग्यं नवकर्णिकारं चलेषुनीलेष्वलकेष्वशोकम् ।
पुष्पं च फुल्लं नवमल्लिकायाः प्रयाति कान्ति प्रमदा जनानाम् ॥

---

# मध्यस्थनिर्वाचनम्

राजा—किमिद शिष्योपदेशकाले युगपदाचार्ययोरुपस्थानम्।

गणदासः—श्रूयताम्। मया तीर्थादभिनयविद्या शिक्षिता।

दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः।

राजा—दृढ जाने। ततः किम्।

गणदासः—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षं 'नायं मे पादरजसापि तुल्य' इत्यधिक्षिप्तः।

हरदत्तः—देव अयमेव मयि प्रथमं परिवादकरः। अत्रभवत किल मम च समुद्रपल्वलयोरिवान्तरमिति। तदत्र भवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः।

विदूषकः—समर्थं प्रतिज्ञातम्।

गणदासः—प्रथमः कल्पः। अवहितो देवः श्रोतुमर्हति।

राजा—तिष्ठतु तावत्। पक्षपातमत्र देवी मन्यते। तत्तस्याः पण्डितकौशिक्या सहितायाः समक्षमेव न्याय्यो व्यवहारः।

विदूषकः—सुष्ठु भवान् भणति।

आचार्यौ—यद्देवाय रोचते।

राजा—मौद्गल्य, अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी।

**कंचुकी**—यदाज्ञापयति देवः। ( इति निष्क्रम्य सपरिव्राजकया देव्या सह प्रविष्टः ) इत इतो देवी।

**देवी**—भगवति हरदत्तस्य गणदासस्य च संरंभे कथं पश्यसि।

**परिव्राजिका**—अलं स्वपक्षावसादशंकया। न परिहीयते प्रतिद्वन्द्विनो गणदासः।

**देवी**—यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति।

**परिव्राजिका**—अयि राज्ञीशब्दभाजनमात्मानमपि तावच्चिन्तयतु भवती। पश्य।

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः।

**विदूषकः**—उपस्थिता पण्डितकौशिकी पुरस्कृत्य देवीधारिणी।

**राजा**—पश्याम्येनाम्।

**परिव्राजिका**—( उपेत्य ) विजयतां देवः।

**राजा**—भगवति अभिवादये।

**धारिणी**—जयत्वार्यपुत्रः।

**राजा**—स्वागतं देव्यै ( परिव्राजिकां विलोक्य ) भगवति क्रियतामासनपरिग्रहः।

( सर्वे उपविशन्ति )

**राजा**—भगवति अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षो जातः। तदत्र भगवत्या प्राश्निकपदमध्यासितव्यम्।

परिव्राजिका—( सस्मितम् ) अलमुपालम्भेन । पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा ।

राजा—मा मैवम् । पण्डितकौशिकी खलु भगवती । पक्षपातिनावनयोरहं देवी च ।

आचार्यौ—सम्यगाह देवः । मध्यस्था भगवती गुणदोषौ नः परिच्छेत्तुमर्हति ।

राजा—तेन हि प्रस्तूयतां विवादः ।

परिव्राजिका—देव प्रयोगप्रधानं हि नाट्यशास्त्रम् । किमत्र वाग्व्यवहारेण । कथं वा देवी मन्यते ।

देवी—यदि मां पृच्छसि एतयोर्विवाद एव मे न रोचते ।

गणदासः—देवि न मां समानविद्यतः परिभवनीयमवगन्तुमर्हसि ।

विदूषकः—भवति पश्याम उरभ्रसंपातम् । किं मुधा वेतनदानेन ।

देवी—ननु कलहप्रियोऽसि ।

विदूषकः—नैवम्, अन्योऽन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः । तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वात्रभवतो दूतं प्रेषयतम् । अथवा मृदंगशब्द एव न उत्थापयिष्यति ।

हरदत्तः—तथा ( इत्युभौ निष्क्रान्तौ )

मालविकाग्निमित्रम् ।

---

# रतिविलापः

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥१॥
अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥२॥
अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥३॥
अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥४॥
उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥५॥
क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥६॥
कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥७॥
स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥ ८ ॥
हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥९॥
परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥१०॥

रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥११॥
नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥१२॥
अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥१३॥
हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥१४॥
अलिपंक्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम् ॥१५॥
प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥१६॥
शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहःस्मर संस्मृत्य न शान्तिरस्ति मे ॥१७॥
रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥१८॥

विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृत. ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥१९॥
अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥२०॥
मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥२१॥

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥२२॥
ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥२३॥
क्व नु ते हृदयंगमः सखा कुसुमोयोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥
अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥२५॥
तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥२६॥
इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥२७॥
अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥२८॥
गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम् ॥२९॥
अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतन्तुगुणस्य कारितं धनुषः पेलव पुष्पपत्रिणः ॥३०॥
विधिना कृतमर्धवैशसं ननु कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥३१॥
तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥३२॥

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते ।
प्रमदा पतिवर्त्मगा इति प्रतिपन्न हि विचेतनैरपि ॥३३॥

अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनु विभावसौ ॥३४॥

कुसुमास्तरणे सहायता बहुश सौम्य गतस्त्वमावयो ।
कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥३५॥

तदनु ज्वलन मदर्पित त्वरयेर्दक्षिणवातवीजनै ।
विदित खलु ते यथा स्मर क्षणमप्युत्सहते न मा विना ॥३६॥

इति चापि विधाय दीयता सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र त मया सहित पास्यति ते स बान्धव ॥३७॥

परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवा ।
निवपे सहकारमञ्जरी प्रियचूतप्रसवो हि ते सखा ॥३८॥

कुमारसभवम्

# अजविलापः

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥१॥

कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥२॥

अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥३॥

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥४॥

अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥५॥

कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥६॥

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥७॥

दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥८॥

मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥९॥

कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशङ्कि मे मनः ॥१०॥

तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥११॥
इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥१२॥
शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्त्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥१३॥
नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥१४॥
इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥१५॥
कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥१६॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ १७ ॥
मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम् ॥ १८ ॥
कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ १९ ॥
तव निश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।
असमाप्य विलासमेखलां किमिदं किंनरकण्ठि सुप्यते ॥ २० ॥
समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ २१ ॥

धृतिरस्तमिता रतिश्च्युता विरत गेयमृतुर्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ २२ ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ २३ ॥
मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे।
अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ २४ ॥
विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम्।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ २५ ॥

# यक्षगृहम्

तत्रागारं धनपति गृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं - सुरपति धनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनय कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥१॥

वापीचास्मिन् मरकतशिलाबद्ध सोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानस संनिकृष्टम्
नाध्यासन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्यहंसाः ॥२॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्या प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेवस्मरामि ॥३॥

रक्ताशोकश्चलकिसलयः केसरश्चात्रकान्तः
प्रत्यासन्ने कुरवकवृते माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥४॥

तन्मध्येच स्फटिकफलका काञ्चनीवासयष्टिः
मूलेबद्धा मणिभिरनति प्रौढ वंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्तितः कान्तयामे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥५॥

## यक्षसन्देशः

तामायुष्मन् मम च वचनादात्मनश्चोपकर्तुम्
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥१॥

अंगेनाङ्गं प्रतनुतनुना गाढतप्तेन तप्तम्
सास्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कंठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥२॥

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥३॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरा लुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥४॥

नन्वात्मानं बहुविगणयन्नात्मनैवावलम्बे

तत् कल्याणि त्वमपि नितरां मागमः कातरत्वम्।

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥५॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ

शेषान्मासान् गमय चतुरो लोचने मीलयित्वा।

पश्चादावां विरहगुणितं तं तमात्माभिलाषं

निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥६॥

# वसन्तसमागमः

अथ समाववृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।
यमकुबेर जलेश्वर वज्रिणां समधुरं मधुरंचित विक्रमम् ॥ १ ॥

जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २ ॥

कुसुमजन्म ततो नव पल्लवास्तदनुषट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ ३ ॥

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।
अभिययुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ ४ ॥

कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् ।
किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥५॥

विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः कुरबकारव कारणतां ययुः ॥ ६ ॥

सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः ।
मधुकरैरकरोन्मधुलोपैर्बकुलमाकुलमायत पङ्क्तिभिः ॥ ७ ॥

अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा ।
अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ८ ॥

प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।
सुरभिगंधिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ९ ॥

श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥१०॥

ललितविभ्रमबंधविचक्षणं सुरभिगंधपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमंगनाः स्मरसखं रसखंडनवर्जितम् ॥११॥
शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिंजितमेखलाः ।
विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥१२॥
हुतहुताशनदीप्तिवनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥१३॥
अलिभिरंजनबिन्दुमनोहरैः कुसुमपंक्तिनिपातिभिरंकितः ।
न खलु शोभयतिस्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥१४॥
त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदितं स्मरमते रमतेस्म वधूजनः ॥१५॥

— रघुवंशम् ।

---

# गंगावर्णनम्

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपंकजानामिन्दीवरैरुत्खचितान्तरेव ॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः ।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥
क्वचित्प्रभा चान्द्रमसी तमोभिः छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥
क्वचिच्च कृष्णोरगभूषणेव भस्मांगरागा तनुरीश्वरस्य ।
पश्यानवद्यांगि विभाति गंगा भिन्नप्रवाहा यमुनातरंगैः ॥

---

# रत्नाकरः ✓

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥१॥
वैदेहि ! पश्यामलयाद् विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥२॥
गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरंगे ।
तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥३॥
गर्भं दधत्यर्कमरीचयोऽस्माद् विवृद्धिमत्राश्नुवते वसूनि ।
अबिन्धनं वह्निमसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥४॥
तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवास्यानवधारणीयं ईदृक्तया रूपमियत्तया वा ॥५॥
नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥६॥
पक्षच्छिदा गोत्रभिदात्तगंधाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥७॥
रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्राभरणं बभूव ॥८॥
मुखार्पणेषु प्रकृति प्रगल्भाः स्वयं तरंगाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धुः ॥९॥
ससत्वमादाय नदीमुखाम्भः संमीलयन्तो विवृताननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥१०॥

मातङ्गनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान्।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचापलत्वम् ॥११॥
वेलानिलाय प्रसृता भुजंगा महोर्मिविस्फूर्जथु निर्विशेषाः।
सूर्यांशुसंपर्कसमृद्धरागै र्व्यज्यन्त एतेमणिभिः फणस्थैः ॥१२॥
प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद् भ्रमता घनेन।
आभाति भूयिष्ठमयं समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥१३॥
दूरादयश्चक्रनिभस्य तन्वि तमालतालीवनराजिनीला।
आभाति वेला लवणाम्बुराशे धारानिबद्धेव कलङ्करेखा ॥१४॥
एते वयं सैकतभिन्नशुक्ति-पर्यस्त-मुक्तापटलं पयोधेः।
प्राप्ता मुहूर्तेन विमानवेगात् कूलं फलावर्जितपूगमालम् ॥१५॥
कुरुष्व तावत्करभोरु पश्चात् मार्गे मृगप्रेक्षिणि दृष्टिपातम्।
एषा विदूरीभवतः समुद्रात्सकानना निष्पततीव भूमिः ॥१६॥

---

# शकुन्तलाप्रस्थानम्

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः )

काश्यपः—यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया।
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।
वैक्लव्यं मयि तावदीदृशमिदं स्नेहादरण्यौकसः।
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः।

( इतिपरिक्रामति )

सख्यौ—हलाशकुन्तले, अवसितमण्डनासि। परिधत्स्व साम्प्रतं क्षौमयुगलम्।

( शकुन्तला उत्थाय परिधत्ते )

गौतमी—जाते, एष ते आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः। आचारं तावत्प्रतिपद्यस्व।

शकुन्तला—( सव्रीडम् ) तातवन्दे।

काश्यपः—वत्से,

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि।

गौतमी—भगवन् वरः खल्वेष नाशीः।

काश्यपः—वत्से, इतः सद्योहुतानग्नीन् प्रदक्षिणीकुरुष्व।

( सर्वेपरिक्रामन्ति )

काश्यपः—( ऋक्छन्दसाशास्ते )

अमीवेदीं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै वैतानास्त्वां वन्हयः पावयन्तु ।
प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क्वे शार्ङ्गरवमिश्राः ।

( प्रविश्य )

**शिष्यः**—भगवन्, इमेस्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इतइतोभवती । ( सर्वेपरिक्रामन्ति )

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्माप्वपीतेपुया
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ।

( कोकिलरवं सूचयित्वा )

अनुमतगमनाशकुन्तला तरुभिरियं वनवासबंधुभिः
परभृतविरुतंकलं यथा प्रतिवचनीकृतमेभिरीदृशम् ।

( आकाशे )

रम्यान्तरः कमलिनी हरितैः सरोभिः
छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्चशिवश्च पन्थाः ।

( सर्वे सविस्मयमाकर्णयन्ति )

गौतमी—जाते, ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवन-
देवताभिः । प्रणम भगवतीः ।

शकुन्तला—( सप्रणामं परिक्रम्य । जनान्तिकम् ) हला प्रियं-
वदे । नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं
परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

प्रियंवदा—नकेवलतपोवनविरहकातरा सख्येव । त्वयोपस्थित
वियोगस्य तपोवनस्यापितावत्समवस्थादृश्यते ।

उद्गलितदर्भकवला मृगी परित्यक्तनर्तनामयूरीः
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीवलताः

शकुन्तला—( स्मृत्वा ) तात, लताभगिनीं वनज्योत्स्नां तावदा
मन्त्रयिष्ये ।

काश्यपः—अवैमि ते तस्यां सोदर्यस्नेहम् । इयंतावद्दक्षिणेन ।

शकुन्तला—( लतामुपेत्य ) वनज्योत्स्ने चूतसंगतापि मां प्रत्या-
लिंग निर्गताभिः शाखाबाहाभिः । अद्यप्रभृतिदूरव-
र्तिनी भविष्यामि ।

काश्यपः—संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशंसुकृतैर्गतास्त्वम् ।
चूतेन संश्रितवती नवमालिकेय
मस्यामहं त्वयि च सम्प्रति वीतचिन्तः ।

इतः पन्थानं प्रतिपद्यस्व ।

शकुन्तला—( सख्यौप्रति ) हला एषाद्वयोर्युवयोर्हस्ते
निक्षेपः ।

सख्यौ—अयंजनः कस्यहस्ते समर्पितः ( इतिबाष्पं विसृजतः )

( सर्वेपरिक्रामन्ति )

शकुन्तला—तात एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्य- दानघप्रसवा भवति तदामह्यं कमपि प्रियनिवेदयि तृकं विसर्जयिष्यथ ।

काश्यपः—नेदं विस्मरिष्यामः ।

शकुन्तला—( गतिभंगंरूपयित्वा ) कोनुखल्वेष निवसने मे स- ज्जते । ( इतिपरावर्तते )

काश्यपः—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ।

शकुन्तला—वत्स, किंसहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धितएव । इदानी- मपिमया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् ।

( इतिरुदती प्रस्थिता )

काश्यपः—उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरुस्थिरतया विहितानुबंधम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलुते विषमीभवन्ति ।

शाङ्गरवः—भगवन्, उदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते।
तदिदं सरस्तीरम्। अत्र मं विरय प्रतिगन्तुमर्हसि।
काश्यपः—तेनहीमां क्षीरवृक्षच्छायामाश्रयामः।
( सर्वे परिक्रम्य स्थिता )
काश्यप—( आत्मगतम् ) किंनुखलु तत्रभवतो दुष्यन्तस्य युक्त-
रूपमस्माभि सन्देष्टव्यम्। ( इति चिन्तयति )
शकुन्तला—(जनान्तिकम्) हला पश्य। नलिनीपत्रान्तरितमपि
सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करं महं
करोमि—इति।
अनुसूया—सखि, मैव मन्त्रय।
एषापि प्रियेणविना गमयति रजनीं विषाददीर्घतराम्
गुरुमपि विरहदुःखमाशाबन्धः साहयति।
काश्यपः—शाङ्गरव, इति त्वयामद्वचनात्स राजा शकुन्तला
पुरस्कृत्य वक्तव्य।
शाङ्गरवः—आज्ञापयतु भवान्।
काश्यपः—अस्मान् साधुविचिन्त्यसंयमधनानुच्चैः कुलं चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेह प्रवृत्तिं च ताम्
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्यात्वया
भाग्यायत्तमतःपरं नखलु तद्वाच्यं वधूबन्धुभि।
शाङ्गरवः—गृहीतः सन्देशः।
काश्यपः—वत्से त्वमिदानीमनुशासनीयासि। वनौकसोऽपि
सन्तो लौकिकज्ञा वयम्।

शार्ङ्गरवः—नखलु धीमतां कश्चिदविषयोनाम ।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने ।
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भवदक्षिणा परिजने भाग्येष्वनुत्सेकिनी ।
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।
कथं वा गौतमी मन्यते ।

गौतमी—एतावान् वधूजनस्योपदेशः । जाते एतत् खलु सर्वमवधारय ।

काश्यपः—वत्से परिष्वजस्व मां सखीजनं च ।

शकुन्तला—तात, इतएव किंप्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

काश्यपः—वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकुन्तला—( पितरमाश्लिष्य ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये ।

काश्यपः—वत्से, किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे,
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षण माकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं,
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥

( शकुन्तला पितुः पादयोः पतति )

काश्यप —यदिच्छामि ते तदस्तु ।

शकुन्तला—( सख्यावुपेत्य ) हला द्वे अपि मां सममेव परिष्वजेथाम् ।

सख्यौ—( तथाकृत्वा ) यदि नाम स राजा प्रत्यभिज्ञानमंथरो भवेत्ततस्तस्येदनामधेयांकितमङ्गुलीयकं दर्शय ।

शकुन्तला—अनेन संदेहेन वामाकम्पितास्मि ।

सख्यौ—माभैषी स्नेहः पापशङ्की ।

शाङ्गरव —युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

शकुन्तला—( आश्रमाभिमुखीभूत्वा ) तात कदानु भूयस्तपोवनं प्रेक्षिष्ये ।

काश्यप—श्रूयताम्—

भूत्वाचिराय चतुरन्तमही सपत्नी,
दौष्यन्तिम प्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पित कुटुम्बभरेणसार्धं,
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥

गौतमी—जाते परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैव मन्त्रयिष्यते । निवर्ततां भवान् ।

काश्यप—वत्से, उपरुध्यते तपोऽनुष्ठानम् ।

शकुन्तला—( भूय पितरमाश्लिष्य ) तपश्चरणपीड़ितं तात ? शरीरम्, तन्मातिमात्रं मम कृत उत्कण्ठितुम ।

काश्यपः—(सनिःश्वासम् )

शममेष्यति मे शोकः कथं नु वत्से त्वयारचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ।

गच्छ । शिवास्तेपन्थानः सन्तु । ( निष्क्रान्ता शकुन्तला सहयायिनश्च ) ।

सख्यौ—( शकुन्तलां विलोक्य ) हा धिक् हा धिक् अन्तर्हिता शकुन्तला वनराज्या ।

काश्यपः—( सनिःश्वासम् ) अनसूये, गतवती वां सहधर्मचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

उभे—तात शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

काश्यपः—स्नेहप्रवृत्तिरेवंदर्शिनी ( सविमर्शं परिक्रम्य ) ।

हन्त भोः—शकुन्तलां पतिकुलं विसृज्यलब्धमिदानीं स्वास्थ्यम् ।

कुतः—अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिगृहीतुः ।
जातोममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥

( इति निष्क्रान्ताः सर्वे ) चतुर्थोऽङ्कः

# परित्यक्ता अयोध्या

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः ।
कुशः प्रवासस्थकलत्रवेषाम् अदृष्टपूर्वां वनितामपश्यत् ॥ १ ॥

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ २ ॥

अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
स विस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ३ ॥

का त्वं शुभे कस्य परिग्रहो वा किंवा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥ ४ ॥

तमब्रवीत् सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन ।
तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्नधिदेवतां माम् ॥ ५ ॥

वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम् ॥ ६ ॥

विशीर्णतल्पाट्टशतो निवेशः पर्यस्तशालः प्रभुणा विना मे ।
विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ७ ॥

निशासु भास्वत्कलनूपुराणां यः संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥८॥

आस्फालितं यत्प्रमदाकराग्रैः मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ ९ ॥

सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान्सरागान् ।
सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे ॥१०॥

कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु ।
त एव मुक्तागणशुद्धयोऽपि हर्म्येषुमूर्छन्ति न चन्द्रपादाः ॥११॥
आवर्ज्यशाखाः सदयं च यासां पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥१२॥
तदर्हसीमां वसतिं विसृज्य मामभ्युपैतुं कुलराजधानीम् ।
हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥१३॥

---

# हरिस्तुतिः

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥१

रसान्तराण्येकरसं यथा दिव्य पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥२

अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥३

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥४

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥५

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥६

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥७

अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥८

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥९

शब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥१०

बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥११॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयः संनिवृत्तये ॥१२॥
प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥१३॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥१४॥
उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥१५॥
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥१६॥
महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥१७॥

रघुवंशदशमसर्गात्

---

# कालिदास-सूक्ति-मुक्तावलिः

१—हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा । रघु०

२—सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ।

३—क्रिया हि वस्तूपहिता प्रसीदति ।

४—पदं हि सर्वत्र गुणैर्निधीयते ।

५—रत्नं समागच्छतु काञ्चनेन ।

६—पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ।

७—विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ।

८—मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः ।

९—द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ।

१०—तेजसां हि न वयः समीक्ष्यते ।

११—अपि स्वदेहात्किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः

१२—आज्ञा गुरूणां ह्यविचारणीया ।

१३—धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ।

१४—वयोरूपविभूतीनामेकैकं मदकारणम् ।'

---

१—कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु । मेघ०

२—याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।

३—रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।

४—मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ।

५—आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ।

६—प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ।

७—कान्तोदन्तः सुहृदुपनतः संगमात् किंचिदूनः ।

८—कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥

९—प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ।

---

१—विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।
कुमार०

२—शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ।

३—प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ।

४—स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ।

५—दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ।

६—क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ।

७—न धर्मवृद्धेषु वयः समीक्ष्यते ।

८—शरीरमाद्यं खलु धर्मसाधनम् ।

९—न रत्नमन्विष्यति मृग्यते हि तत् ।

१०—मनोरथानामगतिर्न विद्यते ।

## मालविकाग्निमित्रम्

१—ननु आकृतिविशेषेष्वादरः पदं करोति ।

२—पत्तने सति ग्रामे रत्नपरीक्षा ।

३—अन्योऽन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्निर्जिते कुत उपशमः ।

४—सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय।

५—सुशिक्षितोऽपि न सर्व उपदेशदर्शने निपुणो भवति।

६—प्रभवत्याचार्यः शिष्यजनस्य।

७—अहो सर्वास्ववस्थास्वनवद्यता रूपस्य।

८—निसर्गनिपुणाः स्त्रियः।

९—नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतंगजः।

१०—अनुरागोऽनुरागेण परीक्षितव्य।

११—न शोभते प्रणयिजने निरपेक्षता।

१२—अविषोऽपि कदाचिद्दशो भवेत्।

१३—कातरो बालभावः।

१४—आगामिसुखं वा दुःखं वा हृदयं समर्थीकरोति।

[ ५७ ]

# परित्यक्ता सीता

आश्वास्य रामावरजः सतीं तामाख्यात-वाल्मीकि-निकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ॥ १ ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ २ ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ३ ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ ४ ॥

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ ५ ॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६ ॥

किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ ७ ॥

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥ ८ ॥

नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥ ९ ॥

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनातिभारावचक्रन्द विग्ना कुररीव भूयः ॥१०॥

नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥११॥

——

# पार्वती-तपश्चर्या

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥ १ ॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥
निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥
मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥
इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५॥
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपः समाधये ॥ ६ ॥
अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥७
महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥ ८ ॥
कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयः समीक्ष्यते ॥ ९ ॥
विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्ट - प्रसवार्चितातिथि ।
नवोटजाभ्यन्तर - संभृतानलं तपोवनं तच्च बभूव पावनम् ॥१०॥

क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदुप्रकृत्या च ससारमेव च ॥११॥
शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभाम् अनन्यदृष्टिः सवितारमैक्षत ॥१२॥
अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तमात्मनः ॥१३॥
निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥१४॥
स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥१५॥

---

श्रीः

# Notes (व्याख्या)

सकलकविशिरोमणिः श्रीकालिदासः अनेन श्लोकेन रघुवंशाख्यं महाकाव्यं चिकीर्षुर्मङ्गलं विदधाति।

वागर्थौ इव = शब्दार्थौ इव ( शब्द और अर्थ की तरह )।

सम्पृक्तौ—नित्यसम्बद्धौ ( सदा मिले हुए )। united.

प्रतिपत्तये—सम्यग् ज्ञानाय ( यथार्थ ज्ञान के लिये )। for the right comprehension of words and their sense.

पितरौ—माता च पिता च—इति पितरौ। पिता मात्रा—इति द्वन्द्वैकशेषः।

अर्थ—शब्द और अर्थ के सम्यग् ज्ञान के लिये मैं शब्द और अर्थ की तरह निरन्तर मिले हुए, जगत् के माता-पिता पार्वती और परमेश्वर की वन्दना करता हूँ।

श्रीकालिदास काव्य में शब्द और अर्थ दोनों की चमत्कृति के जनक हैं। उनके काव्य में जहाँ अर्थ का चमत्कार है वहाँ वैदर्भी रीति के अनुकूल परम सुन्दर अनुप्रासों से परिपूर्ण शब्दों का भी एक अनुपम प्रयोग किया गया है। कालिदास के इस श्लोक के आधार पर ही प्रतीत होता है कि काव्य-प्रकाश के रचयिता श्रीमम्मटाचार्य ने काव्य का लक्षण "तद्दोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इस रूप में किया है। इसके अतिरिक्त कवि ने इस श्लोक में ही अपनी उपमा-चातुरी का सर्वोत्कृष्ट उदाहरण विद्वानों के समक्ष उपस्थित कर दिया है। प्रकृति और पुरुष की पृथक् सत्ता की प्रतीति के रहते हुए उनके अभेद-सम्बन्ध,

भगवान् शङ्कर के अर्धनारीश्वर स्वरूप, शक्ति और शक्तिमान् के नित्य सम्बन्ध एवं बाह्य स्थूल स्वरूप के साथ आन्तरिक सूक्ष्म स्वरूप की एकता को अभिव्यक्त करनेके लिये 'वागर्थाविव' के समान समानधर्मशाली और कोई उपमान मिल भी नहीं सकता था। इस एक ही श्लोक में कवि समस्त दर्शनों का एक परम सुन्दर समन्वय कर देता है ॥१॥

वेदान्तेषु निःश्रेयसायास्तु व ।
विक्रमोर्वशीयस्याय प्रथमो माङ्गलिकः श्लोकः ।

स स्थाणुः (शिव) व (युष्माकम्) निःश्रेयसाय (मोक्षाय) eternal bliss स्थिरभक्तियोगसुलभः (स्थिर भक्ति और योग-साधना के बल से जो सहज ही में प्राप्त हो सकता है), रोदसी (आकाश और पृथ्वी को) व्याप्य (चारों ओर से आवृत कर) pervading heaven and earth स्थितं (विद्यमानम्) अनन्यविषयः (न अन्यस्य विषय.— ईश्वर नाम के शब्द में जो शक्ति और जो महान् अर्थ अन्तर्हित हैं वह ईश्वर को छोड़कर और किसी को अपना विषय नहीं बनाता अर्थात् वह केवल ईश्वर में ही घटता है) यथार्थाक्षरः (जिसके अक्षरों में जो सर्वशक्तिमान् आदि अर्थ है वह सर्वथा यथार्थ है) अन्तः (हृदय में) मुमुक्षुभिः (मोक्ष की इच्छावालों से) मृग्यते (ढूँढ़ा जाता है) is sought.

अर्थ—वेदान्तों में अर्थात् उपनिषदों में, आकाश और पृथ्वी को सर्वत व्याप्त कर स्थित रहनेवाले जिसको एक पुरुष (एक अद्वितीय अर्थात् उसके अतिरिक्त और कोई पृथक् सत्ता इस विश्व में नहीं है) कहा गया है और जिसमें ईश्वर यह शब्द किसी अन्य का वाचक न होकर यथार्थरूप

